लापांश्च वर्जयेत्' इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्तो जैनकुमारसंभवाख्यं महाकाव्यं चिकीर्षवश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टवस्तुनिर्देशात्मकमङ्गलस्य शिष्टाचारपरिप्राप्तत्वात् 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्

इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् ग्रन्थादौवस्तुनिर्देशात्मकं अस्त्युत्तरस्येति मङ्गलमाचरन्ति ।

ध्यात्वा श्री शारदां देवीं नत्वा श्री सद्गुरूनपि । कुमारसंभवस्येयं विवृतिर्लिख्यते मया ॥ १ ॥ यस्मैकाव्ययुगप्रदा च वरदा श्रीशारदा देवता श्रीमज्जैनकुमारसभवमहाकाव्यादिकर्ताकलौ । सिद्धान्तोदधिचन्द्रमाः सहृदयश्रेणीशिरःशेखरः सोऽयं **श्रीजयशेखराख्यसुगुरुर्जीयाज्जगन्मङ्गलम्** ॥२॥ लौकिककाव्यानुसारेण अस्त्युत्तरस्यांदिशीति सप्ताक्षराणि वर्तन्त इति न ज्ञातव्यं किन्तु श्रीस्तंभतीर्थे श्रीमदञ्चलगच्छागगन–प्रभाकरेण सकलविद्वज्जनचित्तचकोरनिशाकरेण यमनियमासनप्राणायामाद्यष्टांगयोगविशिष्टेन समाधिध्यानोपविष्टेन निजमतिजितसुरसूरि· परमगुरु **श्रीजयशेखरसूरिणा** चन्द्रमण्डलसमुज्ज्वलराजहंसस्कंधोषितया चंचलकुण्डलाद्याभरणविभूषितया भगवत्या श्रीभारत्यावत्स त्वं कविचक्रवर्तित्वं प्राप्य निश्चिन्त इवासीनः किंकरोषीति प्रोच्य जैनकुमारसंभवं महाकाव्यं कुरु इत्युक्त्वा अस्त्युत्तरस्यां १ संपन्नकामानयनाभिरामा २ एतदाद्यं काव्ययुग्मं दत्त्वा विहितसुरासुरसे च श्रीयुगादिदेवसत्कजन्मबालकेलियौवनमहेन्द्रस्तवनसुनन्दा सुमङ्गलापाणिग्रहणचतुर्दशस्वप्नदर्शन भरतसंभवप्रातर्वर्णनपुरस्सरं श्रीजैनकुमारसंभवमहाकाव्यं कारितं । तथा लौकिककुमारसंभवे कुमारः कार्त्तिकेय तस्य संभवश्चात्र कुमारो भरतस्तस्य संभवो ज्ञेय पुत्राश्च सर्वे कुमारा उच्यन्ते अत कुमारसंभव इति नाम्ना महाकाव्यमत्रापि ज्ञायते तेनादौ ध्यात्वा श्रीशारदा ।

